॥ हेरम्बस्तोत्रं गौरिकृतम् ॥

श्री गणेशाय नमः ।
गौर्युवाच ।
गजानन ज्ञानविहारकारिन्न मां च जानासि परावमर्षाम् ।
गणेश रक्षस्व न चेच्छरीरं त्यजामि सद्यस्त्वयि भक्तियुक्ता ॥ १॥

विघ्नेश हेरम्ब महोदर प्रिय लम्बोदर प्रेमविवर्धनाच्युत ।
विघ्नस्य हर्ताऽसुरसङ्घहर्ता मां रक्ष दैत्यात्वयि भक्तियुक्ताम् ॥ २॥

किं सिद्धिबुद्धिप्रसरेण मोहयुक्तोऽसि किं वा निशि निद्रितोऽसि ।
किं लक्षलाभार्थविचारयुक्तः किं मां च विस्मृत्य सुसंस्थितोऽसि ॥ ३॥

किं भक्तसङ्गेन च देवदेव नानोपचारैश्च सुयन्त्रितोऽसि ।
किं मोदकार्थे गणपाद्धृतोऽसि नानाविहारेषु च वक्रतुण्ड ॥ ४॥

स्वानन्दभोगेषु परिहृतोऽसि दासीं च विस्मृत्य महानुभाव ।
आनन्त्यलीलासु च लालसोऽसि किं भक्तरक्षार्थसुसङ्कटस्थः ॥ ५॥

अहो गणेशामृतपानदक्षामरैस्तथा वाऽसुरपैः स्मृतोऽसि ।
तदर्थनानाविधिसंयुतोऽसि विसृज्य मां दासीमनन्यभावाम् ॥ ६॥

रक्षस्व मां दीनतमां परेश सर्वत्र चित्तेषु च संस्थितस्त्वम् ।
प्रभो विलम्बेन विनायकोऽसि ब्रह्मेश किं देव नमो नमस्ते ॥ ७॥

भक्ताभिमानीति च नाम मुख्यं वेदे त्वभावान् नहि चेन्महात्मन् ।
आगत्य हत्वाऽदितिजं सुरेश मां रक्ष दासीं हृदि पादनिष्ठाम् ॥ ८॥

अहो न दूरं तव किञ्चिदेव कथं न बुद्धीश समागतोऽसि ।
सुचिन्त्यदेव प्रजहामि देहं यशः करिष्ये विपरीतमेवम् ॥ ९॥

रक्ष रक्ष दयासिन्धोऽपराधान्मे क्षमस्व च ।
क्षणे क्षणे त्वहं दासी रक्षितव्या विशेषतः ॥ १०॥

स्तुवत्यामेव पार्वत्यां शङ्करो बोधसंयुतः ।
बभूव गणपानां वै श्रुत्वा हाहारवं विधेः ॥ ११॥

गणेशं मनसा स्मृत्वा वृषारूढः समाययौ ।

क्षणेन दैत्यराजं तं दृष्ट्वा डमरुणाहनत् ॥ १२॥

ततः सोऽपि शिवं वीक्ष्यालिङ्गितुं धवितो।आभवत् ।
शिवस्य शूलिकादीनि शस्त्राणि कुण्ठितानि वै ॥ १३॥

तं दृष्ट्वा परमाश्चर्यं भयभीतो महेश्वरः ।
सस्मार गणपं सोऽपि निर्विघ्नार्थं प्रजापते ॥ १४॥

पार्वत्याः स्तवनं श्रुत्वा गजाननः समाययौ ।
इति मुद्गलपुराणोक्तं हेरम्बस्तोत्रं सम्पूर्णम् ।